|| श्रीः ||

गीर्वाणज्योतिः मूलसंस्कृत-संहिता-ग्रन्थमाला

पञ्चमं पुष्पम्

श्रीमत्परमहंसपरिव्राजकाचार्यसदानन्दयोगीन्द्रविरचितः

# वेदान्तसारः

सम्पादकः

डॉ. शिवदास कुण्डलिक जाधव




गीर्वाणज्योतिः प्रकाशनम्, सातारा

इ.स. २०२१ प्रथमावृत्तिः शके १९४२

|| श्रीः ||

गीर्वाणज्योतिः मूलसंस्कृत-संहिता-ग्रन्थमाला

पञ्चमं पुष्पम्

श्रीमत्परमहंसपरिव्राजकाचार्यसदानन्दयोगीन्द्रविरचितः

# वेदान्तसारः

(छात्रावृत्तिः)

डॉ. शिवदास कुण्डलिक जाधव

महाराष्ट्रराज्य-महाकवि-कालिदास-संस्कृतसाधना-पुरस्कारेण सम्मानितः

भूतपूर्वः संस्कृत-विभाग-प्रमुखः

छत्रपती शिवाजी महाविद्यालयः, सातारानगरम्




गीर्वाणज्योतिः प्रकाशनम्, सातारा

इ.स. २०२१ प्रथमावृत्तिः शके १९४२

**श्रीमत्परमहंसपरिव्राजकाचार्यसदानन्दयोगीन्द्रविरचितः**

# वेदान्तसारः

=====================================


| | | |
|---|---|---|
| **सम्पादकः** | : | **डॉ. शिवदास कुण्डलिक जाधव** |
| | | भूतपूर्वः संस्कृत-विभागप्रमुखः, छत्रपतिः शिवाजी महाविद्यालयः, सातारानगरम् |
| **आवृत्तिः** | : | प्रथमा आवृत्तिः |
| **प्रकाशनदिनाङ्कः** | : | १५ फेब्रुवारी २०२१, माघ-शु.४; श्रीगणेशजयन्ती |
| **प्रकाशिका** | : | **सौ. सुमित्रा जाधव** |
| | : | गीर्वाणज्योति प्रकाशन |
| | | **सातारा शाखा :** |
| | | कारंजकर नगर, पारशी विहिरीजवळ, विलासपूर, सातारा, ४१५००१ |
| | | **पुणे शाखा :** |
| | | एच.१०३, भास्करा सोसायटी, डीसके विश्व, धायरी, पोस्ट नांदेड, पुणे, ४११६८ |
| | | **मुंबई शाखा :** |
| | | ४/४७, उदय को-हौ. सोसायटी, आरे रोड, गोरेगांव [प.], मुंबई, ४००१०४ |
| **संपर्क** | : | **Mobile: +91 9822097507** |
| **Email** | : | **geerwanajyotiprakashan@gmail.com** |
| **Website** | : | www.geerwanjyoti.in |

ॐ

श्रीमत्सदानन्दयोगीन्द्रविरचितो

# वेदान्तसार:

अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥१॥

अर्थतोऽप्यद्वयानन्दानतीतद्वैतभानतः ।
गुरूनाराध्य वेदान्तसारं वक्ष्ये यथामति ॥२॥

वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च ॥३॥

अस्य वेदान्तप्रकरणत्वात् तदीयैः एव अनुबन्धः तद्वत्ता सिद्धेः न ते पृथगालोचनीयाः ॥४॥

तत्र अनुबन्धो नाम अधिकारिविषयसम्बन्धप्रयोजनानि ॥५॥

अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसम्पन्नः प्रमाता ॥६॥

काम्यानि - स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि ॥७॥

निषिद्धानि-नरकाद्यनिष्टसाधनानि ब्राह्मणहननादीनि ॥८॥

नित्यानि -- अकरणे प्रत्यवायसाधनानि सन्ध्यावन्दनादीनि ॥९॥

नैमित्तिकानि - पुत्रजन्माद्यनुबन्धीनि ||१०||

प्रायश्चित्तानि - पापक्षयसाधनानि चान्द्रायणादीनि ||११||

उपासनानि - सगुणब्रह्मविषयमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि ॥१२॥

एतेषां नित्यादीनां बुद्धिशुद्धिः परं प्रयोजनमुपासनानां तु चित्तैकाग्र्यम् | "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" (बृहदारण्यकोपनिषद् ||४|४|२२||) इत्यादिश्रुतेः "तपसा कल्मषं हन्ति" (मनु १२।१०४) इत्यादिस्मृतेश्च ॥१३॥

नित्यनैमित्तिकयोः उपासनानां त्ववान्तरफलं पितृलोकसत्यलोकप्राप्तिः, 'कर्मणा पितृलोकः विद्यया देवलोकः' (बृहदारण्यकोपनिषद् ||१|५|१६||) इत्यादिश्रुतेः ||१४||

साधनानि नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमादि-षट्कसम्पत्तिमुमुक्षुत्वानि ॥१५॥

नित्यानित्यवस्तुविवेकस्तावद् बह्मैव नित्यं वस्तु ततोऽन्यद-खिलमनित्यमिति विवेचनम् ॥१६॥

ऐहिकानां स्रक्चन्दनवनितादिविषयभोगानां कर्मजन्यतयानित्यत्व-वदामुष्मिकाणामप्यमृतादिविषयभोगानामनित्यतया तेभ्यो नितरां विरतिः - इहामुत्रार्थफलभोग: ||१७||

शमादयस्तु - शमदमोपरतितितिक्षासमाधानश्रद्धाख्याः ||१८||

शमस्तावत् – श्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः ||१९||

दमः -- बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम् ||२०||

निवर्तितानामेतेषां तद्व्यतिरिक्तविषयेभ्य उपरमणमुपरति: अथवा विहितानां कर्मणां विधिना परित्यागः ॥२१॥

तितिक्षा - शीतोष्णादिद्वन्द्वसहिष्णुता ||२२||

निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधि: -- समाधानम् ||२३||

गुरूपदिष्टवेदान्तवाक्येषु विश्वासः -- श्रद्धा ।।२४॥

मुमुक्षुत्वं -- मोक्षेच्छा ॥२५॥

एवम्भूतः प्रमाताधिकारी "शान्तो दान्त" (बृहदारण्योपनिषद् ४|४|२३) इत्यादिश्रुतेः। उक्तञ्च -

"प्रशान्तचित्ताय जितेन्द्रियाय च प्रहीणदोषाय यथोक्तकारिणे।

गुणान्वितायानुगताय सर्वदा प्रदेयमेतत् सततं मुमुक्षवे ॥" इति ।
( उपदेशसाहस्री ३२४।१६।७२) ॥२६॥

विषयः -- जीवब्रह्मक्यं शुद्धचैतन्यं प्रमेयं तत्र एव वेदान्तानां तात्पर्यात् ||२७||

सम्बन्धस्तु - तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमाणस्य च बोध्यबोधकभावः ॥२८॥

प्रयोजनं तु -- तदैक्यप्रमेयगताज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च "तरति शोकम् आत्मवित्" (छान्दोग्योपनिषद् ७|१|१३) इत्यादिश्रुतेः "ब्रह्मविद् ब्रह्मैव भवति" (मुण्डकोपनिषद् ३|२|९) इत्यादिश्रुतेश्च ॥२९॥

अयमधिकारी जननमरणादिसंसारानलसन्तप्तो दीप्तशिरा जलराशिमिवो-पहारपाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य तमनुसरति "तद्विज्ञानार्थं स गुरुमेवा-भिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" (मुण्डकोपनिषद् १|२|१२) इत्यादिश्रुतेः ||३०||

स गुरुः परमकृपयाध्यारोपापवादन्यायेनैनमुपदिशति -

"तस्मै स विद्वानुपसन्नाय सम्यक्

प्रशान्तचित्ताय शमान्विताय ।

येनाक्षरं पुरुषं वेद सत्यं

प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥"(मुण्डकोपनिषद् १|२|१३) इत्यादिश्रुतेः ||३१||

असर्पभूतायां रज्जौ सर्पारोपवत् वस्तुनि अवस्त्वारोप: -- अध्यारोप: ||३२||

वस्तु -- सच्चिदानन्दमद्वयं ब्रह्म ॥३३॥

अज्ञानादिसकलजडसमूहोऽवस्तु ॥३४॥

अज्ञानं तु -- सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिदिति वदन्त्यहमज्ञ इत्याद्यनुभवात् - "देवतात्मशक्तिं स्वगुणैर्निगूढाम्" (श्वेताश्वतरोपनिषद् १/३) इत्यादिश्रुतेश्च ||३५||

इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति च व्यवह्रियते ||३६||

तथाहि -- यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्वव्यपदेशो यथा वा जलानां समष्ट्यभिप्रायेण जलाशय इति तथा नानात्वेन प्रतिभासमानानां जीवगताज्ञानानां समष्ट्यभिप्रायेण तदेकत्वव्यपदेश: "अजामेकाम्" (श्वेताश्वतरोपनिषद् ४/५) इत्यादिश्रुतेः ||३७||

इयं समष्टिरुत्कृष्टोपाधितया विशुद्धसत्त्वप्रधाना ॥३८॥

एतदुपहितं चैतन्यं सर्वज्ञत्वसर्वेश्वरत्वसर्वनियन्तृत्वादिगुणकं सदव्यक्तमन्त-र्यामी जगत्कारणमीश्वर इति च व्यपदिश्यते सकलाज्ञानावभासकत्वात्। 'यः सर्वज्ञः सर्ववित्' (मुण्डकोपनिषद् १/१/९) इति श्रुतेः॥३९॥

ईश्वरस्येयं समष्टिरखिलकारणत्वात् कारणशरीरमानन्दप्रचुर-त्वात्कोशवदा-च्छादकत्वाच्चानन्दमयकोशः, सर्वोपरमत्वात्सुषुप्तिरत एव स्थूलसूक्ष्मप्रपञ्चलय-स्थानमिति चोच्यते ।।४०।।

यथा वनस्य व्यष्ट्यभिप्रायेण वृक्षा इत्यनेकत्वव्यपदेशो यथा वा जलाशयस्य व्यष्ट्यभिप्रायेण जलानीति, तथाऽज्ञानस्य व्यष्ट्यभिप्रायेण तदनेकत्वव्यपदेशः 'इन्द्रो मायाभिः पुरुरूप ईयते' (ऋग्वेद ||६|४७|१८) इत्यादिश्रुतेः ||४१||

अत्र व्यस्तसमस्तव्यापित्वेन व्यष्टिसमष्टिताव्यपदेशः ||४२||

इयं व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना ||४३||

एतदुपहितं चैतन्यमल्पज्ञत्वानीश्वरत्वादिगुणकं प्राज्ञ इत्युच्यते, एकाज्ञानावभासकत्वात् ||४४||

अस्य प्राज्ञत्वमस्पष्टोपाधितयाऽनतिप्रकाशकत्वात् ||४५||

अस्यापीयमहंकारादिकारणत्वात् कारणशरीरम्, आनन्दप्रचुरत्वात् कोशवदाच्छादकात्वाच्चानन्दमयकोशः, सर्वोपरमत्वात् सुषुप्तिरत एव स्थूलसूक्ष्मशरीरप्रपञ्चलयस्थानमिति चोच्यते।।४६।।

तदानीमेतावीश्वरप्राज्ञौ चैतन्यप्रदीप्ताभिरतिसूक्ष्माभिरज्ञानवृत्तिभिरानन्द-मनुभवतः। 'आनन्दभुक् चेतोमुखः प्राज्ञः' (माण्डूक्योपनिषद् ५) इति श्रुतेः, 'सुखमहमस्वाप्सं न किञ्चिदवेदिषम्', इत्युत्थितस्य परामर्शोपपत्तेश्च ||४७||

अनयोः समष्टिव्यष्ट्योर्वनवृक्षयोरिव जलाशयजलयोरिव वाभेदः ||४८||

एतदुपहितयोरीश्वरप्राज्ञयोरपि वनवृक्षावच्छिन्नाकाशयोरिव जलाशयजलगतप्र-तिबिम्बाकाशयोरिव वाऽभेदः, "एष सर्वेश्वर (एष सर्वज्ञ एषोऽन्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्)" (माण्डूक्योपनिषद् ६) इत्यादिश्रुतेः।।४९।।

वनवृक्षतदवच्छिन्नाकाशयोर्जलाशयजलतद्गतप्रतिबिम्बाकाशयोर्वाऽऽधारभूतानुपहिताकाशवदनयोरज्ञानतदुपहितचैतन्ययोराधारभूतं यदनुपहितं चैतन्यं तत्तुरीयमि-त्युच्यते। ' (शान्तं) शिवमद्वैतं चतुर्थ मन्यन्ते (स आत्मा स विज्ञेयः)' (माण्डूक्यो-पनिषद् ७) इत्यादिश्रुतेः ||५०||

इदमेव तुरीयं शुद्धचैतन्यमज्ञानादितदुपहितचैतन्याभ्यां तप्तायःपिण्डवद-विविक्तं सन्महावाक्यस्य वाच्यं, विविक्तं सल्लक्ष्यमिति चोच्यते।।५१।।

अस्याज्ञानस्यावरणविक्षेपनामकमस्ति शक्तिद्वयम् ||५२||

आवरणशक्तिस्तावदल्पोपि मेघोऽनेकयोजनायतमादित्यमण्डलमवलोकयितृनयनपथपिधायकतया यथाच्छादयतीव, तथाज्ञानं परिच्छिन्नमप्यात्मानमपरिच्छिन्नमसंसारिणमवलोकयितृबुद्धिपिधायकतयाच्छादयतीव तादृशं सामर्थ्यम् । तदुक्तम् -

"घनच्छन्नदृष्टिर्घनच्छन्नमर्कं

यथा मन्यते निष्प्रभं चातिमूढः।

तथा बद्धवद्भाति यो मूढदृष्टेः

स नित्योपलब्धिस्वरूपोऽहमात्मा।।" इति (हस्तामलकम् १०)।।५३||

अनयैवावरणशक्त्यावच्छिन्नस्यात्मनः कर्तृत्वभोक्तृत्वसुखदुःखमोहात्मकतुच्छसंसारभावनापि सम्भाव्यते, यथा स्वाज्ञानेनावृतायां रज्ज्वां सर्पत्वसम्भावना ।।५४।।

विक्षेपशक्तिस्तु, यथा रज्ज्वज्ञानं स्वावृतरज्जौ स्वशक्त्या सर्पादिकमुद्भावयति एवमज्ञानमपि स्वावृतात्मनि विक्षेपशक्त्याकाशादिप्रपञ्चमुद्भावयति। तादृशं सामर्थ्यम्। तदुक्तम् --
"विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत्सृजेत्" इति।।५५।।

शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तं स्वोपाधिप्रधानतयोपादानं च भवति ||५६||

यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरप्रधानतयोपादानं च भवति।।५७।।

तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाशः, आकाशाद्वायुर्वायोरग्नि-

रग्नेरापोऽद्भ्यः पृथिवी चोत्पद्यते। 'एतस्मादात्मन आकाशः सम्भूत' (तैत्तिरीयोपनिषद् २|१|१) इत्यादिश्रुतेः ||५८||

तेषु जाड्याधिक्यदर्शनात्तमःप्राधान्यं तत्कारणस्य। तदानीं सत्त्वरजस्तमांसि कारणगुणप्रक्रमेण तेष्वाकाशादिषूत्पद्यन्ते।|५९||

एतान्येव सूक्ष्मभूतानि तन्मात्राण्यपञ्चीकृतानि चोच्यन्ते ||६०||

एतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि चोत्पद्यन्ते।।६१।।

सूक्ष्मशरीराणि सप्तदशावयवानि लिङ्गशरीराणि ||६२||

अवयवास्तु ज्ञानेन्द्रियपञ्चकं, बुद्धिमनसी कर्मेन्द्रियपञ्चकं, वायुपञ्चकञ्चेति ||६३||

ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि ||६४||

एतान्याकाशादीनां सात्त्विकांशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पद्यन्ते ||६५||

बुद्धिर्नाम निश्चयात्मिकान्तःकरणवृत्तिः ||६६||

मनो नाम संकल्पविकल्पात्मिकाऽन्तःकरणवृत्तिः ||६७||

अनयोरेव चित्ताहङ्कारयोरन्तर्भावः ||६८||

अनुसन्धानात्मिकान्तःकरणवृत्तिः चित्तम् ॥६९॥
अभिमानात्मिकान्तःकरणवृत्तिः अहङ्कारः ॥७०॥

एते पुनराकाशादिगतसात्त्विकांशेभ्यो मिलितेभ्यो उत्पद्यन्ते ||७१||

एतेषां प्रकाशात्मकत्वात् सात्त्विकांशकार्यत्वम् ।|७२।।

इयं बुद्धिर्ज्ञानेन्द्रियैः सहिता विज्ञानमयकोशो भवति ||७३||

अयं कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वाद्यभिमानत्वेनेहलोकपरलोकगामी व्यावहारिको जीव इत्युच्यते ||७४||

मनस्तु ज्ञानेन्द्रियैः सहितं सन्मनोमयकोशो भवति।।७५।।

कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि ||७६||

एतानि पुनराकाशादीनां रजोंऽशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पद्यन्ते ||७७||

वायवः प्राणापानव्यानोदानसमानाः ||७८||

प्राणो नाम प्राग्गमनवान्नासाग्रस्थानवर्ती ||७९||

अपानो नामावाग्गमनवान् पाय्वादिस्थानवर्ती ||८०||

व्यानो नाम विश्वग्गमनवानखिलशरीरवर्ती ||८१||

उदानो नाम कण्ठस्थानीय ऊर्ध्वगमनवानुत्क्रमणवायुः ||८२||

समानो नाम शरीरमध्यगताशितपीतान्नादिसमीकरणकरः।।८३।।

केचित्तु नागकूर्मकृकलदेवदत्तधनञ्जयाख्याः पञ्चान्ये वायवः सन्तीति वदन्ति ||८४||

तत्र नाग उद्गिरणकरः ||८५||

कूर्म उन्मीलनकरः ||८६||

कृकलः क्षुत्करः ||८७||

देवदत्तो जृम्भणकरः ||८८||

धनञ्जयः पोषणकरः ||८९||

एतेषां प्राणादिष्वन्तर्भावात्प्राणादयः पञ्चैवेति केचित्।।९०।।

एतत्प्राणादिपञ्चकमाकाशादिगतरजोंऽशेभ्यो मिलितेभ्यः उत्पद्यते ||९१||

इदं प्राणादिपञ्चकं कर्मेन्द्रियैः सहितं सत्प्राणमयकोशो भवति। अस्य क्रियात्मकत्वेन रजोंऽशकार्यत्वम्।।९२।।

एतेषु कोशेषु मध्ये विज्ञानमयो ज्ञानशक्तिमान् कर्तृरूपः । मनोमय इच्छाशक्तिमान् करणरूपः। प्राणमयः क्रियाशक्तिमान् कार्यरूपः । योग्यत्वादेवमेतेषां विभाग इति वर्णयन्ति । एतत्कोशत्रयं मिलितं सत्सूक्ष्मशरीरमित्युच्यते ॥९३॥

अत्राप्यखिलसूक्ष्मशरीरमेकबुद्धिविषयतया वनवजलाशयवद्वा समष्टिरनेकबुद्धिविषयतया वृक्षवजलवद्वा व्यष्टिरपि भवति ॥९४॥

एतत् समष्ट्यु पहित चैतन्य सूत्रात्मा हिरण्यगर्भः प्राणश्चेत्युच्यते सर्वत्रानुस्यूतत्वासानेच्छाक्रियाशक्तिमदुपहितत्वाच्च ॥९५||

अस्यैषा समष्टिः स्थूलप्रपञ्चापेक्षया सूक्ष्मत्वात्सूक्ष्मशरीरं विज्ञानमयादि-कोशत्रयं जाग्रद्वासनामयत्वात्स्वानोऽतएव स्थूलप्रपञ्च-लयस्थानमिति चोच्यते ॥९६||

एतद्वयष्ट्युपहितं चैतन्यं तैजसो भवति तेजोमयान्तःकरणोपहितत्वात् ॥९७॥

एतत् समष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः प्राणश्चेत्युच्यते सर्वत्रानुस्यू-तत्वाज्ज्ञानेच्छाक्रियाशक्तिमदुपहितत्वाच्च ॥९८॥

अस्यैषा समष्टिः स्थूलप्रपञ्चापेक्षया सूक्ष्मत्वात्सूक्ष्मशरीरं विज्ञानमयादि-कोशत्रयं जाग्रद्वासनामयत्वात्स्वप्नोऽतएव स्थूलप्रपञ्चलयस्थानमिति चोच्यते ॥९९॥

एतव्यष्ट्युपहितं चैतन्यं तैजसो भवति, तेजोमयान्तःकरणोपहितत्वात् ||१००||

अस्यापीयं व्यष्टिः स्थूलशरीरापेक्षया सूक्ष्मत्वादिति हेतोरेव सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात् स्वप्नोऽत एव स्थूलशरीरलयस्थान-मिति चोच्यते।।१०१।।

एतौ सूत्रात्मतैजसौ तदानीं मनोवृत्तिभिः | सूक्ष्मविषयाननुभवतः 'प्रविविक्त-भुक्तैजस:' (माण्डूक्योपनिषद् ३) इत्यादिश्रुतेः ||१०२||

अत्रापि समष्टिव्यष्ट्योस्तदुपहितसूत्रात्मतैजसयोर्वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिबिम्बाकाशवच्चाभेदः ||१०३||

एवं सूक्ष्मशरीरोत्पत्तिः||१०४||

स्थूलभूतानि तु पञ्चीकृतानि ||१०५||

पञ्चीकरणं त्वाकाशादिपञ्चस्वेकैकं द्विधा समं विभज्य तेषु दशसु भागेषु प्राथमिकान् पञ्च भागान् प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णा भागानां स्वस्वद्वितीयार्धभागपरित्यागेन भागान्तरेषु संयोजनम् ||१०६||

तदुक्तम् --

'द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः।

स्वस्वेतरद्वितीयांशैर्योजनात्पञ्च पञ्च ते'||इति||१०७||

अस्याप्रामाण्यं नाशङ्कनीयं, त्रिवृत्करणश्रुतेः पच्चीकरणस्याप्युपलक्षणत्वात् ||१०८||

पञ्चानां पञ्चात्मकत्वे समानेऽपि तेषु च 'वैशेष्यात्तु तद्वादस्तद्वादः' (ब्रह्मसूत्र ||२|४|२२) इति न्यायेनाकाशादिव्यपदेशः सम्भवति ||१०९||

तदानीमाकाशे शब्दोऽभिव्यज्यते वायौ शब्दस्पर्शावग्नौ शब्दस्पर्शरूपाण्यप्सु शब्दस्पर्शरूपरसाः पृथिव्यां शब्दस्पर्शरूपरसगन्धाश्च||१०९||

एतेभ्यः पञ्चीकृतेभ्यो भूतेभ्यो भूर्भुवःस्वर्महर्जनस्तपःसत्यमित्येतन्नामकानामुपर्युपरि विद्यमानानामतल-वितल-सुतल-रसातल-तलातल-महातल-पातालनामकानामधोऽधो विद्यमानानां लोकानां ब्रह्माण्डस्य तदन्तर्वर्तिचतचुर्विध-स्थूलशरीराणां, तदुचितानामन्नपानादीनाञ्चोत्पत्तिर्भवति ||११०||

चतुर्विधशरीराणि तु जरायुजाण्डजोद्भिज्जस्वेदजा-ख्यानि ||१११||

जरायुजानि जरायुभ्यो जातानि मनुष्यपश्वादीनि ||११२||

अण्डजान्यण्डेभ्यो जातानि पक्षिपन्नगादीनि ||११३||

उद्भिज्जानि भूमिमुद्भिद्य जातानि लतावृक्षादीनि ||११४||

स्वेदजानि स्वेदेभ्यो जातानि यूकामशकादीनि।।११५।।

अत्रापि चतुर्विधसकलस्थूलशरीरमेकानेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः, वृक्षवज्जलवद्वा व्यष्टिरपि भवति ||११६||

एतत्समष्ट्युपहितं चैतन्यं वैश्वानरो विराडिति च्योच्यते, सर्वनरभिमानित्वा-द्विविधं राजमानत्वाच्च ||११७||

अस्यैषा समष्टिः स्थूलशरीरमन्नविकारत्वादन्नमयकोशः,स्थूलभोगायतन-त्वाच्च स्थूलशरीरं, जाग्रदिति च व्यपदिश्यते।।११८।।

एतद्व्यष्ट्युपहितं चैतन्यं विश्व इत्युच्यते सूक्ष्मशरीराभिमानमपरित्यज्य स्थूलशरीरादिप्रविष्टत्वात् ||११९||

अस्याप्येषा व्यष्टिः स्थूलशरीरमन्नविकारात्वादेव हेतोरन्नमयकोशो जाग्रदिति चोच्यते।।१२०।।

तदानीमेतौ विश्ववैश्वानरौ दिग्वातार्कवरुणाश्विभिः क्रमान्नियन्त्रितेन श्रोत्रादी-

न्द्रियपञ्चकेन क्रमाच्छब्दस्पर्शरूपरसगन्धान्, अग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमा-न्नि-यन्त्रितेन वागादीन्द्रियपञ्चकेन, क्रमाद्वचनादानगमनविसर्गानन्दांश्चन्द्रचतुर्मुख-शङ्करा च्युतैः क्रमान्नियन्त्रितेन मनोबुद्ध्यहङ्कारचित्ताख्येनान्तरिन्द्रिय-चतुष्केण क्रमात्सङ्कल्पनिश्चयाहङ्कार्यचैत्तांश्च सर्वानेतान् स्थूलविषयाननुभवतः ‘जागरितस्था नो बहिः प्रज्ञः’ (माण्डूक्योपनिषद् ७) इत्यादिश्रुतेः ||१२१||

अत्राप्यनयोः स्थूलव्यष्टिसमष्ट्योस्तदुपहितविश्ववैश्वानरयोश्च वनवृक्षवत्तदव-च्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिबिम्बाकाशवच्च पूर्ववदभेदः ||१२२||

एवं पञ्चीकृतपञ्चभूतेभ्यः स्थूलप्रपञ्चोत्पत्तिः।।१२३।।

एतेषां स्थूलसूक्ष्मकारणप्रपञ्चानामपि समष्टिरेको महान् प्रपञ्चो भवति, यथावान्तरवनानां समष्टिरेकं महद्वनं भवति, यथा वाऽवान्तरजलाशयानां समष्टिरेको महान् जलाशयः ||१२४||

एतदुपहितं वैश्वानरादीश्वरपर्यन्तं चैतन्यमप्यवान्तरवनावच्छिन्नाकाशवदवा-न्तरजलाशयगतप्रतिबिम्बाकाशवच्चैकमेव।।१२५।।

आभ्यां महाप्रपञ्चतदुपहितचैतन्याभ्यां तप्तायःपिण्डवदविविक्तं सदनुपहितं चैतन्यं 'सर्वं खल्विदं ब्रह्म' (छान्दोग्योपनिषद् ||३|१४|१) इति (महा-)वाक्यस्य वाच्यं भवति विविक्तं सल्लक्ष्यमपि भवति ||१२६||

एवं वस्तुन्यवस्त्वारोपोऽध्यारोपः सामान्येन प्रदर्शितः।।१२७।।

इदानीं प्रत्यगात्मनीदमिदमयमयमारोपयतीति विशेषत उच्यते।।१२८।।

अतिप्राकृतस्तु-'आत्मा वै जायते पुत्रः' इत्यादिश्रुतेः, स्वस्मिन्निव स्वपुत्रेऽपि प्रेमदर्शनात्, पुत्रे पुष्टे नष्टे चाहमेव पुष्टो नष्टश्चेत्याद्यनु"भवाच्च पुत्र आत्मेति वदति ।।१२९।।

चार्वाकस्तु-'स वा एष पुरुषोऽन्नरसमय' (तैत्तिरीयोपनिषद् ||२|१|१||) इत्यादिश्रुतेः, प्रदीप्तगृहात्स्वपुत्रं परित्यज्यापि स्वस्य निर्गमदर्शनात्, स्थूलोऽहं कृशोऽहमित्याद्यनुभवाच्च स्थूलशरीरमात्मेति वदति।।१३०।।

अपरश्चार्वाकः-'ते ह प्राणाः प्रजापतिं पितरमेत्योचुः' (छान्दोग्योपनिषद् ||५|१|७||) इत्यादिश्रुतेरिन्द्रियाणामभावे शरीरचलनाभावात्काणोऽहं बधिरोऽहमि-त्याद्यनुभवाच्चेन्द्रियाण्यात्मेति वदति ।।१३१।।

अपरश्चार्वाकः-'अन्योऽन्तर आत्मा प्राणमयः' (तैत्तिरीयोपनिषद् ||२|२|१||) इत्यादिश्रुतेः, प्राणाभावे इन्द्रियादिचलनायोगादहमशनायावानहं पिपासावानित्या-द्यनुभवाच्च प्राण आत्मेति वदति ।।१३२।।

अन्यस्तु चार्वाकः -- 'अन्योऽन्तर आत्मा मनोमय' (तैत्तिरीयोपनिषद् ||२|३|१||) इत्यादिश्रुतेर्मनसि - सुप्ते प्राणादेरभावादहं सङ्कल्पवानहं विकल्पवानित्याद्यनुभवाच्च मन आत्मेति वदति।।१३३।।

बौद्धस्तु -- 'अन्योऽन्तर आत्मा विज्ञानमय'(तैत्तिरीयोपनिषद् ||२|४|१||) इत्यादिश्रुतेः कर्तुरभावे करणस्य शक्त्यभावादहं कर्ताऽहं भोक्तेत्याद्यनुभवाच्च बुद्धिरात्मेति वदति।।१३४।।

प्रभाकरतार्किकौ तु -- 'अन्योऽन्तर आत्माऽऽनन्दमय'(तैत्तिरीयोपनिषद् ||२|५|१||) इत्यादिश्रुतेर्बुद्ध्यादीनामज्ञाने लयदर्शनादहमज्ञोऽहं ज्ञानीत्याद्यनुभवाच्चाज्ञानमात्मेति वदतः।।१३५।।

भाट्टस्तु -- 'प्रज्ञानघन एवानन्दमय' (माण्डूक्योपनिषद् ५) इत्यादिश्रुतेः, सुषुप्तौ प्रकाशाप्रकाशसद्भावान्मामहं न जानामीत्याद्यनुभवाच्चाज्ञानोपहितं चैतन्यमात्मेति वदति।।१३६।।

अपरो बौद्धः -- 'असदेवेदमग्र आसीद्' (छान्दोग्योपनिषद् ||६|२|१||) इत्यादिश्रुतेः, सुषुप्तौ सर्वाभावाद्, अहं सुषुप्तौ नासमित्युत्थितस्य स्वाभावपरामर्शविषयानुभवाच्च शून्यमात्मेति वदति।।१३७।।

एतेषां पुत्रादीनामनात्मत्वमुच्यते। एतैरतिप्राकृतादिवादिभिरुक्तेषु श्रुतियुक्त्यनुभवाभासेषु पूर्वपूर्वोक्तश्रुतियुक्त्यनुभवाभासानामुत्तरोत्तरश्रुतियुक्त्यनुभवाभासैरात्मत्वबाधदर्शनात्पुत्रादीनामनात्मत्वं स्पष्टमेव।।१३८।।

किञ्च, प्रत्यगस्थूलोऽचक्षुरप्राणोऽमना अकर्ता चैतन्यं चिन्मात्रं सदित्यादिप्रबलश्रुतिविरोधादस्य पुत्रादिशून्यपर्यन्तस्य जडस्य चैतन्यभास्यत्वेन घटादिवदनित्यत्वादहं ब्रह्मेति विद्वदनुभवप्राबल्याच्च तत्तच्छ्रुतियुक्त्यनुभवाभासानां बाधितत्वादपि पुत्रादिशून्यपर्यन्तमखिलमनात्मैव ||१३९||

अतस्तत्तद्भासकं नित्यशुद्धबुद्धमुक्तसत्यस्वभावं प्रत्यक्चैतन्यमेवात्मवस्त्विति वेदान्तविद्वदनुभवः ||१४०||

एवमध्यारोपः।।१४१।।

अपवादो नाम रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववद्वस्तुविवर्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम् ||१४२||

तदुक्तम् -

'सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः। अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदाहृतः।।इति।।१४३।।

तथाहि -- एतद्भोगायतनं चतुर्विधसकलस्थूलशरीरजातं एतद्भोग्यरूपान्नपानादिकमेतदायतनभूतभूरादिचतुर्दशभुवनान्येतदायतनभूतं ब्रह्माण्डं चैतत्सर्वमेतेषां कारणरूपं पञ्चीकृतभूतमात्रं भवति ||१४४||

एतानि शब्दादिविषयसहितानि पञ्चीकृतानि भूतानि सूक्ष्मशरीरजातं चैतत्सर्वमेतेषां कारणरूपापञ्चीकृतभूतमात्रं भवति ||१४५||

एतानि सत्त्वादिगुणसहितान्यपञ्चीकृतान्युत्पत्तिव्युत्क्रमेणैतत्कारणभूताज्ञानोपहितचैतन्यमात्रं भवति ||१४६||

एतदज्ञानमज्ञानोपहितं चैतन्यं चेश्वरादिकमेतदाधारभूतानुपहितचैतन्यरूपं तुरीयं ब्रह्ममात्रं भवति।।१४७।।

आभ्यामध्यारोपापवादाभ्यां तत्त्वम्पदार्थशोधनमपि सिद्धं भवति ||१४८||

तथाहि -- अज्ञानादिसमष्टिरेतदुपहितं सर्वज्ञत्वादिविशिष्टं चैतन्यमेतदनुपहितं चैतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं तत्पदवाच्यार्थो भवति ||१४९||

एतदुपाध्युपहिताधारभूतमनुपहितं चैतन्यं तत्पदलक्ष्यार्थो भवति ||१५०||

अज्ञानादिव्यष्टिरेतदुपहिताल्पज्ञत्वादिविशिष्टचैतन्यमेतदनुपहितं चैतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं त्वम्पदवाच्यार्थो भवति ||१५१||

एतदुपाध्युपहिताधारभूतमनुपहितं प्रत्यगानन्दं तुरीयं चैतन्यं त्वम्पदलक्ष्यार्थो भवति।।१५२।।

अथ महावाक्यार्थो वर्ण्यते। इदं "तत्त्वमसि' वाक्यं सम्बन्धत्रयेणाखण्डार्थबोधकं भवति ||१५३||

सम्बन्धत्रयं नाम पदयोः सामानाधिकरण्यं, पदार्थयोर्विशेषणविशेष्यभावः, प्रत्यगात्मपदार्थयोर्लक्ष्यलक्षणभावश्चेति ||१५४||

तदुक्तम् ---

"सामानाधिकरण्यं च विशेषणविशेष्यता।

लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम्"।। इति।।१५५।।

सामानाधिकरण्यसम्बन्धस्तावत् यथा 'सोऽयं देवदत्तः' इत्यस्मिन् वाक्ये तत्कालविशिष्टदेवदत्तवाचकसशब्दस्यैतत्कालविशिष्टदेवदत्तवाचकायंशब्दस्य चैकस्मिन् पिण्डे तात्पर्यसम्बन्धः। तथा च 'तत्त्वमसि' इति वाक्येऽपि परोक्षत्वादिविशिष्टचैतन्यवाचकतत्पदस्यापरोक्षत्वादिविशिष्टचैतन्यवाचकत्वम्पदस्य चैकस्मिंश्चैतन्ये तात्पर्यसम्बन्धः।।१५६।।

विशेषणविशेष्यभावसम्बन्धस्तु यथा तत्रैव वाक्ये सशब्दार्थतत्कालविशिष्टदेवदत्तस्यायंशब्दार्थैतत्कालविशिष्टदेवदत्तस्य चान्योऽन्यभेदव्यावर्तकतया विशेषणविशेष्यभावः। तथात्रापि वाक्ये तत्पदार्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वम्पदार्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योऽन्यभेदव्यावर्तकतया विशेषणविशेष्यभावः ।।१५७।।

लक्ष्यलक्षणसम्बन्धस्तु यथा तत्रैव वाक्ये सशब्दायंशब्दयोस्तदर्थयोर्वा विरुद्धतत्कालैतत्कालविशिष्टत्वपरित्यागेनाविरुद्धदेवदत्तेन सह लक्ष्यलक्षणभावः। तथात्रापि वाक्ये तत्त्वम्पदयोस्तदर्थयोर्वा विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्वपरित्यागेनाविरुद्धचैतन्येन सह लक्ष्यलक्षणभावः ||१५८||

इयमेव भागलक्षणेत्युच्यते।।१५९।।

अस्मिन् वाक्ये 'नीलमुत्पलम्' इति वाक्यवद् वाक्यार्थो न सङ्गच्छते ||१६०||

तत्र तु नीलपदार्थनीलगुणस्योत्पलपदार्थोत्पलद्रव्यस्य च शौक्ल्यपटादिभेद-व्यावर्तकतयान्योऽन्यविशेषणविशेष्यभावसंसर्गस्यान्यतरविशिष्टस्यान्यतरस्य तदैक्यस्य वा वाक्यार्थत्वाङ्गीकारे प्रमाणान्तरविरोधाभावात्तद्वाक्यार्थः सङ्गच्छते ||१६१||

अत्र तु तदर्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वमर्थापरोक्षत्वादिविशिष्ट-चैतन्यस्य चान्योऽन्यभेदव्यावर्तकतया विशेषणविशेष्यभावसंसर्गस्यान्यतर-विशिष्टस्यान्यतरस्य तदैक्यस्य च वाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणविरोधाद् वाक्यार्थो न सङ्गच्छते ||१६२||

तदुक्तम् --

“संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र सम्मतः।

अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः”।। इति (पञ्चदशी ||७|७५||)

।।१६३।।

अत्र 'गङ्गायां घोषः प्रतिवसति' इति वाक्यवज्जहल्लक्षणापि न सङ्गच्छते ||१६४||

तत्र तु गङ्गाघोषयोराधाराधेयभावलक्षणस्य वाक्यार्थस्याशेषतो विरुद्धत्वाद् वाक्यार्थमशेषतः परित्यज्य तत्सम्बन्धितीरलक्षणाया युक्तत्वाज्जहल्लक्षणा सङ्गच्छते ||१६५||

अत्र तु परोक्षापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य भागमात्रे विरोधाद् भागान्तरमपि परित्यज्यान्य लक्षणाया अयुक्तत्वाज्जहल्लक्षणा न सङ्गच्छते ||१६६||

न च गङ्गापदं स्वार्थपरित्यागेन तीरपदार्थं यथा लक्षयति, तथा तत्पदं त्वम्पदं वा स्वार्थपरित्यागेन त्वम्पदार्थं तत्पदार्थं वा लक्षयत्वतः कुतो जहल्लक्षणा न संगच्छत इति वाच्यम् ||१६७||

तत्र तीरपदाश्रवणेन तदर्थाप्रतीतौ लक्षणया तत्प्रतीत्यपेक्षायामपि तत्त्वम्पदयोः श्रूयमाणत्वेन तदर्थप्रतीतौ लक्षणया पुनरन्यतरपदेनान्यतरपदार्थप्रतीत्यपेक्षाभावात्।।१६८।।

अत्र 'शोणो धावति' इति वाक्यवदजहल्लक्षणापि न सम्भवति ॥१६९॥

तत्र शोणगुणगमनलक्षणस्य वाक्यार्थस्य विरुद्धत्वात् तदपरित्यागेन तदाश्रयाश्वादिलक्षणया तद्विरोधपरिहारसम्भवादजहल्लक्षणा सम्भवति ॥१७०॥

अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य विरुद्धत्वात् तदपरित्यागेन तत्सम्बन्धिनो यस्य कस्यचिदर्थस्य लक्षितत्वेऽपि तद्विरोधपरिहारासम्भवादजहल्लक्षणा न सम्भवत्येव ।।१७१।।

न च तत्पदं त्वम्पदं वा स्वार्थविरुद्धांशपरित्यागेनांशान्तरसहितं त्वम्पदार्थं तत्पदार्थं वा लक्षयत्वतः कथं प्रकारान्तरेण भागलक्षणाङ्गीकरणमिति वाच्यम् ॥१७२॥

एकेन पदेन स्वार्थांशपदार्थान्तरोभयलक्षणाया असम्भवात्, पदान्तरेण तदर्थप्रतीतौ लक्षणया पुनस्तत्प्रतीत्यपेक्षाभावाच्च।।१७३।।

तस्माद्यथा 'सोऽयं देवदत्त:' इति वाक्यं तदर्थो वा तत्कालैतत्कालविशिष्टदेवदत्तलक्षणस्य वाक्यार्थस्यांशे विरोधाद् विरुद्धतत्कालैतत्कालविशिष्टत्वांशं परित्यज्याविरुद्धं देवदत्तांशमात्रं लक्षयति, तथा 'तत्त्वमसि' इति वाक्यं तदर्थो वा परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्यांशे विरोधाद् विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्वांशं परित्यज्याविरुद्धमखण्डचैतन्यमात्रं लक्षयतीति।।१७४।।

अथाधुना 'अहं ब्रह्मास्मि' (बृहदारण्यकोपनिषद् १|४|१०||) इत्यनुभववाक्यार्थो वर्ण्यते ॥१७५॥

एवमाचार्येणाध्यारोपापवादपुरस्सरं तत्त्वम्पदार्थौ शोधयित्वा वाक्येनाखण्डार्थेऽवबोधितेऽधिकारिणोऽहं नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दानन्ताद्वयं ब्रह्मास्मीत्यखण्डाकाराकारिता चित्तवृत्तिरुदेति ॥१७६॥

सा तु चित्प्रतिबिम्बसहिता सती प्रत्यगभिन्नमज्ञातं परं ब्रह्म विषयीकृत्य तद्गताज्ञानमेव बाधते | तदा पटकारणतन्तुदाहे पटदाहवदखिलकारणेऽज्ञाने बाधिते सति तत्कार्यस्याखिलस्य बाधितत्वात्तदन्तर्भूताखण्डाकाराकारिता चित्तवृत्तिरपि बाधिता भवति ||१७७||

तत्र प्रतिबिम्बितं चैतन्यमपि, यथा दीपप्रभादित्यप्रभावभासनासमर्था सती तयाभिभूता भवति, तथा स्वयम्प्रकाशमानप्रत्यगभिन्नपरब्रह्मावभासनानर्हतया तेनाभिभूतं सत् स्वोपाधिभूताखण्डचित्तवृत्तेर्बाधितत्वाद् दर्पणाभावे मुखप्रतिबिम्बस्य मुखमात्रत्ववत् प्रत्यगभिन्नपरब्रह्ममात्रं भवति।।१७८।।

एवं च सति 'मनसैवानुद्रष्टव्यम्' (बृहदारण्यकोपनिषद् ||४|४|१९||) 'यन्मनसा न मनुते' (केनोपनिषद् १/५) इत्यनयोः श्रुत्योरविरोधो वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात् ||१७९||

`तदुक्तम् --

'फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्। ब्रह्मण्यज्ञाननाशाय

वृत्तिव्याप्तिरपेक्षिता'। (पञ्चदशी ||६|९०||) इति ||१८०||

'स्वयं प्रकाशमानत्वान्नाभास उपयुज्यते' । (पञ्चदशी ||६|९२||) इति च।।१८१।।

जडपदार्थाकाराकारितचित्तवृत्तेर्विशेषोऽस्ति ||१८२||

तथाहि -- अयं घट इति घटाकाराकारितचित्तवृत्तिरज्ञातं घटं विषयीकृत्य तद्गताज्ञाननिरसनपुरस्सरं स्वगतचिदाभासेन जडं घटमपि भासयति ||१८३||

तदुक्तम् -

'बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्।

तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्' ।।(पञ्चदशी ||७|९१||) इति ||१८४||

यथा दीपप्रभामण्डलमन्धकारगतं घटपटादिकं विषयीकृत्य तद्गतान्धकारनिरसनपुरस्सरं स्वप्रभया तदपि भासयतीति।।१८५।।

एवम्भूतस्वस्वरूपचैतन्यसाक्षात्कारपर्यन्तं श्रवणमनननिदिध्यासनसमाध्यनुष्ठानस्यापेक्षितत्वात्तेऽपि प्रदर्श्यन्ते ||१८६||

श्रवणं नाम षड्विधलिङ्गैरशेषवेदान्तानामद्वितीये वस्तुनि तात्पर्यावधारणम् ||१८७||

लिङ्गानि तूपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि।।१८८।।

तदुक्तं -

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ।

अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥१८९॥

तत्र प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपपादनमुपक्रमोपसंहारौ | यथा छान्दोग्ये षष्ठाध्याये प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः 'एकमेवाद्वितीयम्' (६|२|१) इत्यादौ 'ऐतदात्म्यमिदं सर्वम्' (||६|२|८||) इत्यन्ते च प्रतिपादनम् ||१९०||

प्रकरणप्रतिपाद्यस्य वस्तुनस्तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः। यथा तत्रैवाद्वितीयवस्तुनि मध्ये 'तत्त्वमसि' इति नवकृत्वः प्रतिपादनम् ||१९१||

प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः प्रमाणान्तराविषयीकरणमपूर्वता। यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयीकरणम् ||१९२||

फलं तु प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं प्रयोजनम्। यथा तत्र "आचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" (छान्दोग्योपनिषद् ||६|१४|२||) इत्यद्वितीयवस्तुज्ञानस्य तत्प्राप्तिः प्रयोजनं श्रूयते ||१९३||

प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनमर्थवादः। यथा तत्रैव "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" (छान्दोग्योपनिषद् ||६|१|३) इत्यद्वितीयवस्तुप्रशंसनम् ||१९४||

प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिरुपपतिः। यथा तत्र "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छान्दोग्योपनिषद् ||६|१|४) इत्यादावद्वितीयवस्तु-साधने विकारस्य वाचारम्भणमात्रत्वे युक्तिः श्रूयते।।१९५।।

मननं तु श्रुतस्याद्वितीयवस्तुनो वेदान्तानुगुणयुक्ति भिरनवरतमनुचिन्तनम् ||१९६||

विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहो निदिध्यासनम् ||१९७||

समाधिर्द्विविधः -- सविकल्पको निर्विकल्पकश्चेति ||१९८||

तत्र सविकल्पको नाम ज्ञातृज्ञानादिविकल्पलयानपेक्षयाऽद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरवस्थानम् ||१९९||

तदामृन्मयगजादि-भानेऽपि मृद्भानवद् द्वैतभानेऽप्यद्वैतं वस्तु भासते ||२००||

तदुक्तम् -

"दृशिस्वरूपं गगनोपमं परं

सकृद्विभातं त्वजमेकमक्षरम्।

अलेपकं सर्वगतं यदद्वयं

तदेव चाहं सततं विमुक्त ओम्"।। (उपदेशसाहस्री || ७३|१०|१) इति।।२०१।।

निर्विकल्पकस्तु ज्ञातृज्ञानादिविकल्पलयापेक्षयाद्वितीयवस्तुनि तदाकारा-कारितायाश्चित्तवृत्तेरतितरामेकीभावेनावस्थानम् ||२०२||

तदा तु जलाकाराकारितलवणानवभासेन जलमात्रावभासवदद्वितीयव-स्त्वाकाराकारितचित्तवृत्त्यनवभासेनाद्वितीयवस्तुमात्रमवभासते ||२०३||

ततश्चास्य सुषुप्तेश्चाभेदशङ्का न भवति। उभयत्र वृत्त्यभाने समानेऽपि तत्सद्भावासद्भावमात्रेणानयोर्भेदोपपत्तेः।।२०४।।

अस्याङ्गानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः ||२०५||

तत्र “अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः” ||२०६||

“शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः” ||२०७||

करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकादीन्यासनानि ||२०८||

रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः ||२०९||

इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः ||२१०||

अद्वितीयवस्तुन्यन्तरिन्द्रियधारणं धारणा ||२११||

तत्राद्वितीयवस्तुनि विच्छिद्य विच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहो ध्यानम् ||२१२||

समाधिस्तूक्तः सविकल्पक एव।।२१३।।

एवमस्याङ्गिनो निर्विकल्पकस्य लयविक्षेपकषायरसास्वादलक्षणाश्चत्वारो विघ्नाः सम्भवन्ति ||२१४||

लयस्तावदखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा ||२१५||

अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्यावलम्बनं विक्षेपः ||२१६||

लयविक्षेपाभावेऽपि चित्तवृत्तेः रागादिवासनया स्तब्धीभावादखण्डवस्त्वनवलम्बनं कषायः ||२१७||

अखण्डवस्त्वनवलम्बनेनापि चित्तवृत्तेः सविकल्पकानन्दास्वादनं रसास्वादः। समाध्यारम्भसमये सविकल्पकानन्दास्वादनं वा।।२१८।।

अनेन विघ्नचतुष्टयेन विरहितं चित्तं निर्वातदीपवदचलं सदखण्डचैतन्यमात्रमवतिष्ठते यदा तदा निर्विकल्पकः समाधिरित्युच्यते ||२१९||

तदुक्तम् --

“लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत् पुनः।

सकषायं विजानीयाच्छमप्राप्तं न चालयेत्। नास्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेत्"।। इति,

(गौडपादकारिका ||३|४४-४५||)

"यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता"। इति च (श्रीमद्भगवद्गीता ||६|१९||)।।२२०।।

अथ जीवन्मुक्तलक्षणमुच्यते ||२२१||

जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृतेऽज्ञानतत्कार्यसञ्चितकर्मसंशयविपर्ययादीनामपि बाधितत्वादखिलबन्धरहितो ब्रह्मनिष्ठः ||२२२||

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे"।।इत्यादिश्रुतेः (मुण्डकोपनिषद् ||२|२|८||)।।२२३।।

अयं तु व्युत्थानसमये मांसशोणितमूत्रपुरीषादिभाजनेन शरीरेण, आन्ध्यमान्द्यापटुत्वादिभाजनेनेन्द्रियग्रामेण, अशनायापिपासाशोकमोहादिभाजनेनान्तःकरणेन च पूर्वपूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानाविरुद्धारब्धफलानि च पश्यन्नपि बाधितत्वात् परमार्थतो न पश्यति | यथेन्द्रजालमिदमिति ज्ञानवांस्तदिन्द्रजालं पश्यन्नपि परमार्थमिदमिति न पश्यति ||२२४||

"सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव" इत्यादिश्रुतेः ||२२५||

उक्तं च -

"सुषुप्तवज्जाग्रति यो न पश्यति,

द्वयं च पश्यन्नपि चाद्वयत्वतः।

तथा च कुर्वन्नपि निष्क्रियश्च यः,

स आत्मविन्नान्य इतीह निश्चयः" ।। (उपदेशसाहस्री ५) इति ||२२६||

अस्य ज्ञानात् पूर्वं विद्यमानानामेवाहारविहारादीनामनुवृत्तिवच्छुभवासनानामेवानुवृत्तिर्भवति, शुभाशुभयोरौदासीन्यं वा ||२२७||

तदुक्तम् --

“बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि।

शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे” (नैष्कर्म्यसिद्धिः ||४|६२||) इति ||२२८||

“ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः” (उपदेशसाहस्री ११५) इति।।२२९।।

तदानीममानित्वादीनि ज्ञानसाधनान्यद्वेष्टृत्वादयः सद्गुणाश्चलङ्कारवदनुवर्तन्ते ||२३०||

तदुक्तम् --

“उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः।

अयत्नतो भवन्त्यस्य न तु साधनरूपिणः” (नैष्कर्म्यसिद्धिः ||४|६९||)

इति।।२३१।।

किं बहुनाऽयं देहयात्रामात्रार्थमिच्छानिच्छापरेच्छाप्रापितानि सुखदुःखलक्षणान्यारब्धफलान्यनुभवन्नन्तःकरणाभासादीनामवभासकः संस्तदवसाने प्रत्यगानन्दपरब्रह्मणि प्राणे लीने सत्यज्ञानतत्कार्यसंस्काराणामपि विनाशात् परमकैवल्यमानन्दैकरसमखिलभेदप्रतिभासरहितमखण्डं ब्रह्मावतिष्ठते ||२३२||

“न तस्य प्राणा उत्क्रामन्ति” (बृहदारण्यकोपनिषद् ||४|४|६||), “अत्रैव समवलीयन्ते” (बृहदारण्यकोपनिषद् ||३|२|११||, “विमुक्तश्च विमुच्यत” (कठोपनिषद् ||५|१||) इत्यादिश्रुतेः।।२३३।।

|| इति श्रीमत्परमहंसपरिव्राजकाचार्यसदानन्दविरचितो वेदान्तसारः समाप्तः ||

# ग्रंथ व हस्तलिखिते यांविषयी विनम्र आवाहन

---------------------------------------------------------------------

ग्रंथ व हस्तलिखिते ही ज्ञानाचा खजिना आहेत, अनेक घरात बंदिस्त कपाटात हा दुर्मिळ खजिना धुळीत लोप पावत आहे. आम्ही आपणांस विनम्रपणे आवाहन करतो की, आपल्याकडे असलेले छापील व हस्तलिखित साहित्य, नियतकालिके, मासिके (जुनी,नवीन) ‘संस्कृत ग्रंथालया’कडे जमा करावे. या ग्रंथालयाकडे संस्कृत वाङ्मय व संत साहित्य विषयक दुर्मिळ ग्रंथ जमा आहेत . अनेक अभ्यासक, संशोधक यांचा लाभ घेत आहेत. आपला बहुमूल्य ठेवा पुढच्या पिढीला ज्ञानासाठी मिळत राहील. तरी आपण सहकार्य करावे.ही विनंती.

इच्छुकांनी पुढील पत्त्यावर संपर्क साधावा.

**गीर्वाणज्योति संस्कृत ग्रंथालय,**
**कारंजकरनगर, पारशी विहिरीजवळ,**
**विलासपूर, सातारा – ४१५ ००१**
**(सं.क्र. ९८२२०९७५०७)**
E-mail: geerwanlib@gmail.com




# गीर्वाणज्योति प्रकाशन

## संस्कृत नेट/ सेट परीक्षा देणाऱ्यांसाठी सुवर्ण संधी

Subject code = 25

## संस्कृत NET/ JRF/ SET

## online सराव प्रश्नपत्रिका

- अभ्यासक्रमातील १० ही घटकांवर प्रश्न
- प्रश्नांची पुनरावृत्ती नाही
- प्रश्नांची तात्काळ उत्तरे
- प्रगती आलेख
- प्रतिसंच= १२ प्रश्नपत्रिका = १२०० प्रश्न
- सोडवलेली प्रश्नपत्रिका अनेकदा सोडवू शकता
- मोबाईलवर देखील प्रश्नपत्रिका सोडवू शकता

Subscribe करण्यासाठी खालील link वर click करा.

https://forms.gle/k9cEunP8ahTJXWKr5

**SUBSCRIPTION FEE:**

**प्रति संच = रु.५००/-**

**एकूण ३ संच= रु.१५००/-**

नमुना प्रश्नपत्रिकेसाठी खालील link वर click करा.

https://forms.gle/AHZYx35me7i1em687

**पैसे भरण्यासाठी संपर्क :-**
गीर्वाणज्योति प्रकाशन,
पारशी विहिरीजवळ, कारंजकरनगर,
विलासपूर, सातारा, महाराष्ट्र ४१५००१
**भ्रमणध्वनी ९१+ : ९८२२०९७५०७**

**ONLINE PAYMENT:**

ACCOUNT NAME – GEERWANJYOTI

ACCOUNT NO. 037004042209195001

IFSC - CSBK0000370

BANK NAME - CATHOLIC SYRIAN BANK (CSB)

BRANCH – SATARA

**UPI**- geerwanajyotiprakashan@oksbi

Gpay- 9822097507















# गीर्वाणज्योती प्रकाशन, सातारा

1. मैत्री शुद्धलेखनाशी, प्रा.गजानन चव्हाण , डॉ.शिवदास जाधव
2. छात्र संस्कृत शब्दकोश, डॉ.शिवदास जाधव व डॉ. नीलेश जोशी
3. Experimental Psychology, Maragam
4. निवडक अप्रसिद्ध उपनिषदे, डॉ. नीलेश जोशी
5. भामिनी विलास: प्रास्ताविक – अन्योक्ति – विलास:,डॉ.शिवदास जाधव
6. सार्थ निघण्टुकोश,डॉ. नीलेश जोशी
7. विभक्त्यर्थ प्रकरण, डॉ.शिवदास जाधव, डॉ. नीलेश जोशी
8. संज्ञाप्रकरणम्, डॉ.शिवदास जाधव
9. महात्मा गांधीप्रणीत शिक्षण संकल्पना, प्रा. सुरेखा मत्सावार
10. The Glorious Symbols of India as UNESCO's World Heritag, Prof. Sandeep Dhikale
11. अभितः परितः, डॉ. सौ. प्रज्ञा शरद देशपांडे
12. अनन्तयात्रा , ज्योती पुजारी
13. अथातो ब्रह्मजिज्ञासा- डॉ. शैलजा बापट
14. साहित्यदर्पणः- प्रथम-परिच्छेदः- डॉ.शिवदास जाधव, डॉ. नीलेश जोशी
15. पाण्डुरङ्गाष्टकम् डॉ.शिवदास जाधव
16. श्रीकल्किस्तोत्रम् डॉ.शिवदास जाधव
17. मराठीचे संशोधन (भाषा आणि साहित्य)- डॉ. अनिल गवळी
18. रघुवंशम् प्रथमः सर्गः- मराठी अनुवाद, परिशिष्टे- डॉ. शिवदास जाधव, डॉ. शशिकांत दरगू
19. वेदान्तसारः- डॉ. शिवदास जाधव
20. तर्कभाषा - डॉ. शिवदास जाधव
21. नलचम्पूः - डॉ. शिवदास जाधव
22. ईशावास्योपनिषत् - डॉ. शिवदास जाधव


- Contact Us:
- Geerwanjyoti Publication,
- Karanjkarnagar, Near Parashi Vihir, Vilaspur, Satara, Maharashtra, India. 41500
- Mobile: +919822097507